श्रीराजराजेश्वरी मन्त्रमातृकास्तवः
श्रीराजराजेश्वरीतर्पणस्तोत्रम् (विद्यार्चनपद्धतौ)
ॐ श्रीगणेशाय नमः ।
कल्याणायुतपूर्णचन्द्रवदनां प्राणेश्वरानन्दिनीं
पूर्णां पूर्णतरां परेशमहिषीं पूर्णामृतास्वादिनीम् ।
सम्पूर्णां परमोत्तमामृतकलां विद्यावतीं भारतीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १॥

एकारादिसमस्तवर्णविविधाकारैकचिद्रूपिणीं
चैतन्यात्मकचक्रराजनिलयां चन्द्रान्तसञ्चारिणीम् ।
भावाभावविभाविनीं भवपरां सद्भक्तिचिन्तामणिं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ २॥

ईहाधिक्परयोगिवृन्दविदितां स्वानन्दभूतां परां var ईशाधीश्वरयोगि
पश्यन्तीं तनुमध्यमां विलसिनीं श्रीवैखरीरूपिणीम् ।
आत्मानात्मविचारिणीं विवरगां विद्यां त्रिबीजात्मिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ३॥

लक्ष्यालक्ष्यनिरीक्षणां निरूपमां रुद्राक्षमालाधरां
त्र्यक्षार्धाकृतिदक्षवंशकलिकां दीर्घाक्षिदीर्घस्वराम् ।
भद्रां भद्रवरप्रदां भगवतीं भद्रेश्वरीं मुद्रिणीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ४॥

ह्रींबीजागतनादबिन्दुभरितामोङ्कारनादात्मिकां
ब्रह्मानन्दघनोदरीं गुणवतीं ज्ञानेश्वरीं ज्ञानदाम् ।
ज्ञानेच्छाकृतिनीं महीं गतवतीं गन्धर्वसंसेवितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ५॥

हर्षोन्मत्तसुवर्णपात्रभरितां पीनोन्नताघूर्णितां (?)
हुंकारप्रियशब्दजालनिरतां सारस्वतोल्लासिनीम् ।
सारासारविचारचारुचतुरां वर्णाश्रमाकारिणीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ६॥

सर्वेशाङ्गविहारिणीं सकरुणां सन्नादिनीं नादिनीं
संयोगप्रियरूपिणीं प्रियवतीं प्रीतां प्रतापोन्नताम् ।
सर्वान्तर्गतिशालिनीं शिवतनूसन्दीपिनीं दीपिनीं var सर्वान्तरगत
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ७॥

कर्माकर्मविवर्जितां कुलवतीं कर्मप्रदां कौलिनीं
कारुण्याम्बुधिसर्वकामनिरतां सिन्धुप्रियोल्लासिनीम् ।
पञ्चब्रह्मसनातनासनगतां गेयां सुयोगान्वितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ८॥

हस्त्युत्कुम्भनिभस्तनद्वितयतः पीनोन्नतादानतां
हाराद्याभरणां सुरेन्द्रविनुतां शृङ्गारपीठालयाम् ।
योन्याकारकयोनिमुद्रितकरां नित्यां नवार्णात्मिकां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ९॥

लक्ष्मीलक्षणपूर्णभक्तवरदां लीलाविनोदस्थितां
लाक्षारञ्चितपादपद्मयुगलां ब्रह्मेन्द्रसंसेविताम् । var रञ्जित
लोकालोकितलोककामजननीं लोकाश्रयाङ्कस्थितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १०॥

ह्रींकाराश्रितशङ्करप्रियतनुं श्रीयोगपीठेश्वरीं
माङ्गल्यायुतपङ्कजाभनयनां माङ्गल्यसिद्धिप्रदाम् ।
तारुण्येन विशेषिताङ्गसुमहालावण्यसंशोभितां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ ११॥

सर्वज्ञानकलावतीं सकरुणां सर्वेश्वरीं सर्वगां
सत्यां सर्वमयीं सहस्रदलजां सत्त्वार्णवोपस्थिताम् ।
सङ्गासङ्गविवर्जितां सुखकरीं बालार्ककोटिप्रभां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १२॥

कादिक्षान्तसुवर्णबिन्दुसुतनुं सर्वाङ्गसंशोभितां
नानावर्णविचित्रचित्रचरितां चातुर्यचिन्तामणिम् ।
चित्तानन्दविधायिनीं सुचपलां कूटत्रयाकारिणीं
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १३॥

लक्ष्मीशानविधीन्द्रचन्द्रमकुटाद्यष्टाङ्गपीठाश्रितां
सूर्येन्द्वग्निमयैकपीठनिलयां त्रिस्थां त्रिकोणेश्वरीम् ।
गोप्त्रीं गर्वनिगर्वितां गगनगां गङ्गागणेशप्रियां
श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १४॥

ह्रींकूटत्रयरूपिणीं समयिनीं संसारिणीं हंसिनीं
वामाचारपरायणीं सुकुलजां बीजावतीं मुद्रिणीम् । var वामाराध्यपदाम्बुजां
कामाक्षीं करुणार्द्रचित्तसहितां श्रीं श्रीत्रिमूर्त्यम्बिकां

श्रीचक्रप्रियबिन्दुतर्पणपरां श्रीराजराजेश्वरीम् ॥ १५॥

या विद्या शिवकेशवादिजननी या वै जगन्मोहिनी
याब्रह्मादिपिपीलिकान्तजगदानन्दैकसन्दायिनी ।
या पञ्चप्रणवद्विरेफनलिनी या चित्कलामालिनी
सा पायात्परदेवता भगवती श्रीराजराजेश्वरी ॥ १६॥

इति श्रीशाक्तमतसिद्धान्तसंस्थापनवामाचारपरमाचर्यवर्य-
वावदूकविद्वच्छङ्करानन्दविराजितः
श्रीराजराजेश्वरीमातृकामन्त्रस्तवः सम्पूर्णः ॥